# ॥ श्रीगङ्गास्तोत्रम् ॥

देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे ।
शङ्करमौलिविहारिणि विमले मम मतिरास्तां तव पदकमले ॥ १॥

भागीरथि सुखदायिनि मातस्तव जलमहिमा निगमे ख्यातः ।
नाऽहं जाने तव महिमानं पाहि कृपामयि मामज्ञानम् ॥ २॥

हरिपदपाद्यतरङ्गिणि गङ्गे हिमविधुमुक्ताधवलतरङ्गे ।
दूरीकुरु मम दुष्कृतिभारं कुरु कृपया भवसागरपारम् ॥ ३॥

तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम् ।
मातर्गङ्गे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः ॥ ४॥

पतितोद्धारिणि जाह्नवि गङ्गे खण्डितगिरिवरमण्डितभङ्गे ।
भीष्मजननि हे मुनिवरकन्ये पतितनिवारिणि त्रिभुवनधन्ये ॥ ५॥

कल्पलतामिव फलदाम् लोके प्रणमति यस्त्वां न पतति शोके ।
पारावारविहारिणि गङ्गे विमुखयुवतिकृततरलापाङ्गे ॥ ६॥

तव चेन्मातः स्रोतः स्नातः पुनरपि जठरे सोऽपि न जातः ।
नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनि महिमोत्तुङ्गे ॥ ७॥

पुनरसदङ्गे पुण्यतरङ्गे जय जय जाह्नवि करुणापाङ्गे ।
इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे भृत्यशरण्ये ॥ ८॥

रोगं शोकं तापं पापं हर मे भगवति कुमतिकलापम् ।
त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे ॥ ९॥ गतिर्मय

अलकानन्दे परमानन्दे कुरु करुणामयि कातरवन्द्ये ।
तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः ॥ १०॥

वरमिह नीरे कमठो मीनः किं वा तीरे शरटः क्षीणः ।
अथवा श्वपचो मलिनो दीनस्तव न हि दूरे नृपतिकुलीनः ॥ ११॥

भो भुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये ।
गङ्गास्तवमिमममलं नित्यं पठति नरो यः स जयति सत्यम् ॥ १२॥

येषां हृदये गङ्गाभक्तिस्तेषां भवति सदा सुखमुक्तिः ।
मधुराकान्तापञ्झटिकाभिः परमानन्दकलितललिताभिः ॥ १३॥

गङ्गास्तोत्रमिदं भवसारं वाञ्छितफलदम् विमलं सारम् ।
शङ्करसेवकशङ्कररचितं पठति सुखीस्तव इति च समाप्तः ॥ १४॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं गङ्गास्तोत्रं सम्पूर्णम् ॥

गङ्गास्तोत्रम्
विप्रा ऊचुः-
स्तोत्रे शृणु यथाप्रोक्ते खण्डे प्रकृतिसंज्ञके ।
शिवागमे च गङ्गायाः महापापप्रणाशने ॥ १॥

श्रीनारायण उवाच-
शिवसङ्गीतसम्मुग्धश्रीकृष्णाङ्गसमुद्भवाम् ।
राधाङ्ग इव संयुक्तां तां गङ्गां प्रणमाम्यहम् ॥ २॥

यज्जन्म सृष्टेरादौ च गोलोके रासमण्डले ।
सन्निधाने शङ्करस्य तां गङ्गां प्रणमाम्यहम् ॥ ३॥

गोपैर्गोम्पिभिराकीर्णे शुभे राधामहोत्सवे ।
कार्तिकीपूर्णिमाजातां तां गङ्गां प्रणमाम्यहम् ॥ ४॥

कोटियोजनविस्तीर्णां दैयैर्लक्षगुणा ततः ।
समावृता या गोलोकं तां गङ्गां प्रणमाम्यहम् ॥ ५॥

षष्टिलक्षयोजना या ततो दैर्ध्ये चतुर्गुणा ।
समावृता या वैकुण्ठं तां गङ्गां प्रणमाम्यहम् ॥ ६॥

त्रिंशल्लक्षयोजना या दैर्ध्यें पञ्चगुणा ततः ।
प्रावृता शिवलोकं या तां गङ्गां प्रणमाम्यहम् ॥ ७॥

लक्षयोजनविस्तीर्णा दैर्ध्यें सप्तगुणा ततः ।
आवृता ध्रुवलोकं या तां गङ्गां प्रणमाम्यहम् ॥ ८॥

लक्षयोजनविस्तीर्णा दैर्ध्यें दशगुणा ततः ।
आवृता चन्द्रलोकं या तां गङ्गां प्रणमाम्यहम् ॥ ९॥

षष्टिसहस्रयोजना या दैर्ध्यें दशगुणा ततः ।
आवृता सूर्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १०॥

लक्षयोजनविस्तीर्णा दैर्ध्यें पञ्चगुणा ततः ।
आवृता सत्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥ ११॥

दशलक्षयोजना या दैर्ध्यें पञ्चगुणा ततः ।
आवृता तपोलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १२॥

सहस्रयोजना या दैर्ध्ये दशगुणा ततः ।
आवृता जनलोकं या तां गङ्गां प्रणमाम्यहम् ॥ १३॥

सहस्रयोजनायामा दैर्ध्ये सप्तगुणा ततः ।
आवृता या च कैलासं तां गङ्गां प्रणमाम्यहम् ॥ १४॥

शतयोजनविस्तीर्णा दैर्ध्ये दशगुणा ततः ।
मन्दाकिनी येन्द्रलोकं तां गङ्गां प्रणमाम्यहम् ॥ १५॥

पाताले या भोगवती विस्तीर्णा दशयोजना ।
ततो दशगुणा दीर्घीं तां गङ्गां प्रणमाम्यहम् ॥ १६॥

क्रोशैकमात्रविस्तीर्णा ततः क्षीणा च कुत्रचित् ।
क्षितौ याऽलकनान्दाख्या तां गङ्गां प्रणमाम्यहम् ॥ १७॥

सत्ये या क्षीरवर्णा च त्रेतायां क्षीरसन्निभा ।
द्वापरे चन्दनाभा च तां गङ्गां प्रणमाम्यहम् ।
जलप्रभा कलौ या च नान्यत्र पृथिवीतले ॥ १८॥

स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम् ।
यस्या प्रभावमतुलं पुराणे च श्रुतौ श्रुतम् ॥ १९॥

या पुण्यदा पापहन्त्री तां गङ्गां प्रणमाम्यहम् ।
यत्तोयकणिकास्पर्शे पापिनां च पितामह ।
ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत् ॥ २०॥

इत्येवं कथितं ब्रह्मन् गङ्गापद्यैकविंशतिः ।
स्तोत्ररूपं च परमं या पुण्यं पुण्यबीजकम् ॥ २१॥

नित्यं यो हि पठेद्भक्त्या सम्पूज्य च सुरेश्वरीम् ।
सोऽश्वमेधफलं नित्यं लभते नात्र संशयः ॥ २२॥

अपुत्रो लभते पुत्रं भार्याहीनो लभेत्प्रियाम् ।
रोगात्प्रमुच्यते रोगी बन्धान्मुक्तो भवेद्ध्रुवम् ॥ २३॥

अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ।
यः पठेत्प्रातरुत्थाय नित्यं स्तोत्रमिदं शुभम् ॥ २४॥

शुभं भवेच्च दुःस्वप्नो गङ्गास्नानफलं लभेत् ।

इति श्रीनानापुराणसारोद्धारे गङ्गाभक्तिप्रकाशे ब्रह्मवैवोक्त गङ्गास्तोत्रं सम्पूर्णम् ।